॥ श्रीः ॥

# महाराज्ञीसहस्रनामस्तोत्रम्





के. आर. माधवरामभ्रातृभिः

स्वीये

मुद्रणालये मुद्रयित्वा प्रकाशितम् ।

शिवरात्र्यङ्कः १९८७

0.50

श्रीः

नमो महाराज्ञीभगवत्यै

चतुर्भुजां चन्द्रकलार्धशेखरां
सिंहासनस्थां भुजगोपवीतिनीम् ।
पाशाङ्कुशाम्भोरुहखड्गधारिणीं
राज्ञीं भजे चेतसि राज्यदायिनीम् ॥

श्रीभैरवी ॥ ओं भगवन्वेदतत्त्वज्ञ मंत्रतंत्रवि-
चक्षण । शरण्य सर्वलोकेश शरणागतवत्सल ॥
कथं श्रियमवाप्नोति लोके दारिद्र्यदुःखभाक् ।
[1]तान्त्रिको भैरवेशान तन्मे गदितुमर्हसि ॥

---

१ 'मांन्त्रिको' पाठः ।

श्रीभैरवः ॥ या देवी निष्कला राज्ञी भगवत्य-
मलेश्वरी । सा सृजत्यवाति [1]विश्वं संहरिष्यति
तामसी ॥ तस्या नामसहस्रं ते वक्ष्ये स्नेहेन
पार्वति । अवाच्यं दुर्लभं लोके दुःखदारिद्र्य-
नाशनम् ॥ परमार्थप्रदं पुण्यं परमैश्वर्यकारणम् ।
सर्वागमरहस्याढ्यं सकलार्थप्रदीपनम् ॥ समस्त-
शोकशमनं महापातकनाशनम् । सर्वमंत्रमयं दि-
व्यं राज्ञीनामसहस्रकम् ॥ अस्य श्रीमहाराज्ञी-
नामसहस्रस्तवराजस्य ब्रह्माऋषिः गायत्रं
छन्दः श्रीभूतेश्वरीमहाराज्ञीदेवता ह्रींबीजं
सौःशक्तिः क्लींकीलकं श्रीमहाराज्ञीसहस्रनाम-
स्तवराजपाठे विनियोगः ॥ ब्रह्माऋषये नमः
शिरसि । गायत्रं छन्दसे नमो मुखे ।

१ व्यत्ति पाठः ।

श्रीभूतेश्वरीमहाराज्ञीदेवतायै नमो हृदि । ह्रीं बीजाय नमो गुह्ये । सौः शक्तये नमः पादयोः । क्लीं कीलकाय नमो नाभौ । पाठे विनियोगाय नमः सर्वाङ्गेषु ॥ ह्रामिति करषडङ्गन्यासः ॥ ॐ राज्यप्रदायै विद्महे ह्रीं पञ्चदशाक्षर्यै धीमहि श्रीं तन्नो महाराज्ञी प्रचोदयात् ॥ ३ ॥

उद्यद्दिवाकरसहस्ररुचिं त्रिनेत्रां
सिंहासनोपरिगतामुरगोपवीताम् ।
खड्गाम्बुजाढ्यकलशामृतपात्रहस्तां
राज्ञीं भजामि विकसद्वदनारबिन्दाम् ॥

ॐ ह्रीं श्रीं रां महाराज्ञी क्लीं सौः पञ्चदशाक्षरी । ह्रीं-स्वाहा त्र्यक्षरीविद्या परा भगवती विभा ॥
भास्वती [1]भद्रिका भीमा भर्गरूपा मनस्विनी ।

---

१ 'भद्रकृन्मूर्तिः' पाठः ।

माननीया मनीषा च [1]मनोजा च मनोजवा[2] ॥
मानदा मन्त्रविद्या च महाविद्या षडक्षरी ।
षट्कूटा च त्रिकूटा च त्रयी वेदत्रयी [3]शिवा ॥
शिवाकारा विरूपाक्षी शशिखण्डावतंसिनी ।
महालक्ष्मीःमहोरस्का महोजस्का महोदया ॥
मातङ्गी मोदकाहारा मदिरारुणलोचना । साध्वी शीलवती [4]श्लाघ्या सुधाकलशधारिणी ॥ खड्गिनी [5]पद्मिनी पद्मा पद्मकिञ्जल्करञ्जिता । हृत्पद्मवासिनी हृद्या पानपात्र[6]धराधरा ॥ धराधरेन्द्रतनया दक्षिणा दक्षजा दया । दयावती महामेधा मोदिनी बोधिनी गदा ॥ गदाधरार्चिता[7] गोदा गङ्गा गोदावरी गया । महाप्रभावसहिता महोरगविभूषणा ॥ महामुनिकृतातिथ्या [8]साध्वी

---

१ 'मनोजन्मप्रबाधिनी २ 'मनोभवा' ३ 'मता' ४ 'शाला'
५ 'पद्महस्ता च' ६ 'कराम्बुजा' ७ 'र्चितपदा' ८ 'माध्वी' पाठः ।

मानवती मघा * । बाल[१] सरस्वती लक्ष्मीः दुर्गा दुर्गतिनाशिनी ॥ शारी शरीरमध्यस्था वैखरी खेचरेश्वरी । शिवदा शिववक्षःस्था कालिका त्रिपुरा[२] पुरी ॥ पुरारिकुक्षिमध्यस्था मुरारि-हृदयेश्वरी । बलारिराज्यदा चण्डी चामुण्डा मुण्डधारिणी ॥ मुण्डमालाञ्चिता मुद्रा क्षोभ-णाकर्षणा क्षमा । ब्राह्मी नारायणी देवी कौमारी चापराजिता ॥ रुद्राणी च शचीन्द्राणी वाराही वरिसुन्दरी । नारसिंही भैरवेशी भैरवाकार-भीषणा ॥ नागा[३]लंकारशोभाढ्या नागयज्ञोप-वीतिनी । नागकङ्कणकीयूरा नागहारा सुरे-श्वरी ॥ सुरारिघातिनी पूता पूतना डाकिनी क्रिया[४] । क्रियावती कुरी कृत्या राकिनी लाकिनी

---

* मदिरापानतत्परा पाठान्तरम् ।

१ 'मह[illegible]' २ 'रेवती' ३ 'नागा[illegible]' ४ '[illegible]' पाठः ।

लया ॥ लीलावती रसाकीर्णा नागकन्या मनो-
हरा । हारकङ्कणशोभाढ्या सदानन्दा शुभङ्क-
री ॥ प्रहासिनी मधुमती [1]स्मरश्रीः स्मरमोहिनी ।
महोग्रवपुषी वार्ता वामाचारप्रिया सिरा ॥ सु-
धामयी वेणुकरा [2]वैरिहा वामसुन्दरी । वारि
मध्यस्थिता वामा वामनेत्रा शशिप्रभा ॥ शर्मदा
शांकरी सीता रवीन्दुशिखिलोचना । मदिरा
वारुणी वीणा गीतिज्ञा मदिरावती ॥ वटस्था वा-
रुणीसूक्तिर्वटजा वटवासिनी । वटकी वीरसू-
र्वन्द्या स्तम्भिनी मोहनी च [3]मुत ॥ मुद्गरांकुश-
हस्ता च वराभयकरा कुटी । पाटीरद्रुमवल्ली च
चटिका वटुकेश्वरी ॥ इष्टदा कृषिभूः कीर्ती रेव-
तीरमणप्रिया । रोहिणी रेवती रम्यारमणारोम-

१ 'सरसी' २ 'वीर' ३ चमः पाठः ।

हर्षिणी ॥ रसोल्लासा रसासारा सारिणी तारिणी तडित् । तरी तरित्रहस्ता च तोतुला तरणिप्रभा ॥ रत्नाकरप्रिया रम्भा रत्नालंकारशोभिता । रुक्माङ्गदा गदाहस्ता गदाधरवरप्रदा ॥ षट्रसा[1] द्विरसा माला मालाभरणभूषिता । मालती मल्लिकामोदा मोदकाहारवल्लभा ॥ वल्लभी मधुरा माया काशी कांची [2]ललन्तिका । हसन्तिका हसन्ती च भ्रमन्ती च वसन्तिका ॥ क्षेमा क्षेमङ्करी क्षामा क्षौमवस्त्रा[3] क्षणेश्वरी । क्षणदा क्षेमदा सीरा सीरपाणिसमर्चिता ॥ क्रीता क्रीतातपाः क्रूरा कमनीया कुलेश्वरी । कूर्चबीजा कुठाराढ्या कूर्मिणी कूर्मसुन्दरी ॥ कारुण्या चैव काश्मीरी दूती द्वारवती ध्रुवा । ध्रुवस्तुता

१ '[illegible] च' २ 'लसन्तिका' । ३ 'क्षौमयुगावृता' पाठः ।

द्रुतगतिः पीठेशी भगलामुखी ॥ सुमुखी शो-
भनानीती रत्नज्वालामुखी नुतिः । अलकोज्ज-
यिनी भोग्या भङ्गी भोगवती बला ॥ धर्म-
राजपुरी पूता पूर्णसत्त्वामरावती । अयोध्या
योधनीया च युगमाता च यक्षिणी ॥ यज्ञेश्वरी
योगगम्या योगिध्येया यशस्विनी । यशोवती
च शोभाङ्गी चारुहासा चलाचला ॥ हरेश्वरी
हरेर्माया मायिनी वायुवेगिनी । अम्बालि-
काम्बा भर्गेशी भृगुकूटा महा[2]द्युतिः ॥ को[3]शे-
श्वरी च कमला कीर्तिदा कीर्तिवर्धिनी । कठो-
रवाक् कुहूमूर्तिश्चन्द्रबिम्बसमानना ॥ चन्द्रकुं-
कुमलिप्ताङ्गी कनकाचलवासिनी । मलयाचल-
सानुस्था हिमाद्रितनया तनुः ॥ हिमाद्रिकुक्षि-



१ चार्वङ्गी २ भीति ३ लोकेश्वरी पाठः ।

देशस्था कुब्जिका कोसलेश्वरी । कारैकनिगडा गूडा गूडगुल्फातिगोपिता ॥ तनुजा तनुरूपा च बाणचापधरा नुतिः । धुरीणा धूम्रवाराही धूम्रकेशारुणानना ॥ अरुणेशी रतिःस्वातिर्गरिष्ठा च गरीयसी । महानसी महाकारा सुरासुरभयङ्करी ॥ अणुरूपा महज्ज्योतिरनिरुद्धसरस्वती । श्यामा श्याममुखी शान्ता श्रान्तसन्तापहारिणी ॥ गौर्गुण्या गोमयी गुह्या गोमती गुरवंशगा[1] । गुरुवाक् च गया चैव गङ्गा गोदावरी गदा ॥ गीतसंतोषसंयुक्ता[2] ग्राहिणी ग्रहिणी गुहा । गणप्रिया गजगतिर्गान्धारी गन्धमोदिनी ॥ गन्धमादनसानुस्था सह्याचलकृतालया । गजाननप्रिया[3] गण्या ग्रासकग्रा-

---

१ 'गुरुवागमय' २ 'संयुक्ता' ३ 'प्रीतिकर्त्री' पाठः ।

हवाहना ॥ गुहप्रसूर्गुहावासा ग्रहमालाविभू-
षणा । कौवेरी कुहकभ्रान्तिस्तर्कविद्या प्रि-
यङ्करी ॥ पीताम्बरा पटाकारा पताका सृष्टिजा
स्वधा । दाक्षायणी दक्षसुता दक्षयज्ञविनाशि-
नी ॥ ताराचक्रस्थिता तारा तुरी तुर्या तुटिस्तु-
ला । सन्ध्यात्रयी सन्ध्यजरा सन्ध्या तारुण्य-
लालिता ॥ ललिता लोहिता लम्पा चम्पा
कम्पा कुलासृणिः । स्मृतिः सत्यवती स्वस्था
समाना मानवर्धिनी ॥ महोमयी मनस्तुष्टिः
कामधेनुः सनातनी । सूक्ष्मरूपा सूक्ष्ममुखा
स्थूलरूपा कलावती ॥ तलातलाश्रया सिन्धु-
स्त्र्यम्बिका लम्पिका जया । सौदामिनी सुधा-
सिन्धु सनकर्षिसमर्चिता ॥ मन्दाकिनी च य-

मुना विपाशा नर्मदानदी । गण्डक्यैरावती
सिप्रा वितस्ता च सरस्वती ॥ रेवा चैरावती
चेक्षुमती सागरगामिनी । देवकी देवमाता
च देवेशी देवसुन्दरी ॥ दैत्यघ्नी दमनी दान्ता[1]
दितिर्दितिजसुन्दरी । विद्याधरी च विद्येशी
विद्याधरजसुन्दरी ॥ मेनका चित्रलेखा च चि-
त्रिणी च तिलोत्तमा । उर्वशी रोहिणी[2] रम्भा चा-
प्सरोगण[3]सेविता ॥ यक्षिणी यक्षलोकेशी नर-
वाहनपूजिता । यक्षेन्द्रतनया योग्या यक्षना-
यकसुन्दरी ॥ गन्धर्वतोषिता गन्धा सुगन्धा
गीततत्परा । गन्धर्वतनया नाम्ना[4] गीतिर्गन्धर्व-
सुन्दरी ॥ मन्दोदरी करालाक्षी मेघनादवर-
प्रदा । मेघवाहनसन्तुष्टा मेघमूर्तिश्च राक्ष-

१ 'दात्री' । २ 'मोहिनी' । ३ 'सुन्दरी' । ४ 'पूज्या' पाठः ।

सी ॥ रक्षोहन्त्री केकसी च रक्षोनायकसुन्दरी । किन्नरी कम्बुकण्ठी च कलकण्ठस्वना सुधा ॥ किंमुखी हयवक्त्रा च कीला किन्नरसुन्दरी । पिशाची राजमातङ्गी उच्छिष्टपदसंस्थिता ॥ महापिशाचिनी चान्द्री पिशाचकुलसुन्दरी । गुह्येश्वरी गुह्यरूपा गुर्वी गुह्यकसुन्दरी ॥ सिद्धिप्रदा सिद्धवधूः सिद्धेशी सिद्धसुन्दरी । भूतेश्वरी भूतलया भूतधात्री भयापहा ॥ भूतभीतिहरा भव्या भूतजा भूतसुन्दरी । पृथ्वी पार्थिवलोकेशी ब्रह्मविष्णुसमर्चिता ॥ वसुन्धरा वसुनुता पृथिवी भूमिसुन्दरी । अम्भोधितनया लुप्ता जलजाक्षी जलेश्वरी ॥ अम्मूर्तिरम्मयी मारी जलस्था जलसुन्दरी । तेजस्विनी महोधात्री [1]तेजस्विसूर्यबि-

---

१ 'तेजस्वी सू' पाठः ।

ग्बगा ॥ सूर्यकान्तिः सूरतेजा तेजोरूपैकसुन्दरी।
वायुवाहा वायुमुखी वायुलोकैकसुन्दरी ॥ गग-
नस्था खेचरेशी शून्यरूपा निराकृतिः निराभा-
सा भासमाना द्युतिराकाशसुन्दरी ॥ क्षितिमूर्ति-
धरानन्ता क्षितिभृल्लोकसुन्दरी । अब्धियाना
रत्नशोभा वारणेशी वरायुधा ॥ पाशहस्ता पोष-
णा च वरुणेश्वरसुन्दरी । अनिलैकरुचिर्ज्योतिः
पंचानिलगतिः स्थितिः ॥ प्राणापानसमानेच्छा
उदानव्यानरूपिणी । पंचवात[1]गतिर्नाडीरूपिणी
वातसुन्दरी ॥ अग्निरूपा वह्नि[2]शिखा वडवानलस-
न्निभा । हेतिर्हव्यं हुतज्योतिरग्निजा वह्निसु-
न्दरी ॥ सोमेश्वरी सोमकला सोमपानपरायणा ।
सौम्यानना सौम्यरूपा सोमस्था सोमसुन्दरी ॥

१ 'वहन्नाडी'। २ 'मुखा' पाठः।

सूर्यप्रभा सूर्यमुखी सूर्यजा सूर्यसुन्दरी। याज्ञिकी यज्ञभागेच्छा यजमानवरप्रदा ॥ याजकी यज्ञविद्या च यजमानैकसुन्दरी। आकाशगामिनी वन्द्या शब्दजाकाशसुन्दरी ॥ मीनप्रिया मीननेत्रा मीनाशा मीनसुन्दरी। कूर्मपृष्ठगता कूर्मी कूर्मजा कूर्मरूपिणी ॥ वाराही वीरसूर्वर्य्या[१] वरारोहा मृगेक्षणा। वराहमूर्तिर्वाचाला दंष्ट्रावाराहसुन्दरी ॥ नरसिंहाकृतिर्देवी दुष्टदैत्यनिसूदिनी। प्रह्लादवरदा नारी नारसिंहैकसुन्दरी ॥ वामजा वामनाकारा नारायणपरायणा। बलिदानवदर्पघ्नी वाम्या वामनसुन्दरी॥ रामप्रिया रामकीला क्षत्रवंशभयंकरी[२]। दनुपुत्री राजकन्या रामा परशुधारिणी॥ भार्गवी भार्गवेष्टा च जमदग्निवरप्रदा

१ 'वंद्या' पाठः। २ 'क्षयङ्करी' पाठः।

कुठारधारिणी रात्रिर्जामदग्न्यैकसुन्दरी ॥ सीतालक्ष्मणसेव्या च रक्षःकुलविनाशिनी । रामप्रिया च शत्रुघ्नी शत्रुघ्नभरतेष्टदा ॥ लावण्यामृतधाराढ्या लवणासुरघातिनी । लोहितास्या प्रसन्नास्या स्वारामा रामसुन्दरी ॥ कृष्णकेशा कृष्णमुखी यादवान्तकरी लया । यादोगणार्चिता योज्या राधाश्रीकृष्णसुन्दरी ॥ बुद्धप्रसूर्बुद्धदेवी जिनमार्गपरायणा । जितक्रोधा जितालस्या जिनसेव्या जितेन्द्रिया ॥ जिनवंशकरी चोग्रा नीलान्ता बुद्धसुन्दरी । काली कोलाहलप्रीता प्रेतवाहा पुरेश्वरी ॥ कल्किप्रिया कम्बुधरा कालिकालैकसुन्दरी । विष्णुमाया ब्रह्ममाया शाम्भवी शववाहना ॥ इन्द्रावरजवक्त्रस्था स्थाणुपत्नी

१ 'जितकामादिषड्वर्गा' २ 'वक्षःस्था' पाठः ।

पलालिनी । जृम्भिणी जम्भहर्त्री च लम्बमान-
कचाकुला ॥ कुलाकुक्षपद्देशानी पद्दानफल-
प्रदा । कुलवागीश्वरी कुल्या कुलजा कुल-
सुन्दरी ॥ पुरन्दरेष्टा[1] तारुण्या लया पुण्यजने-
श्वरी । पुण्योत्साहा पापहंत्री पाकशासनसु-
न्दरी ॥ सूर्यकोटिप्रतीकाशा सूर्यतेजोमयी मषी ।
लेखिनी भ्राजिता रज्जुरूपिणी सूर्यसुन्दरी ॥
चन्द्रिका च सुधाधारा ज्योत्स्ना शीतांशुसुन्दरी ।
लोलाक्षी च शताक्षी च सहस्राक्षी सहस्रपात् ॥
सहस्रशीर्षा चेन्द्राक्षी सहस्रभुजवल्लिका । कोटि-
[2]रत्नांशुशोभा च शुभ्रवस्त्रा शतानना ॥ शतानन्दा
श्रुतिधरा पिङ्गला चोग्रनादिनी । सुषुम्णा हारकी-
यूरनूपुरारावसंकुला ॥ घोरनादा घोरमुखी चो-

१ 'रेष्टातारुण्या' । २ 'दीप्तांशु' पाठः ।

न्मुखी चोल्मुकायुधा। गोपिता गुर्जरीगाथा गायत्री वेदवल्लभा॥ वल्लकीस्वननादा च नादविद्या नदीतटी। बिन्दुरूपा चक्रयोनिर्बिन्दुनादस्वरूपिणी॥ चक्रेश्वरी भैरवेशी महाभैरववल्लभा। कालभैरवभार्या च कल्पान्तरङ्गनर्तकी॥ प्रलयानलधूमाभा योनिमध्यकृतालया। भूचरी खेचरीमुद्रा नवमुद्रा विलासिनी॥ वियोगिनी श्मशानस्था श्मशानार्चनतोषिता। भास्वराङ्गी भर्गशिखा[1] भर्गवामाङ्गवासिनी॥ भद्रकाली विश्वकाली श्रीकाली मेघवाहना। नीलकाली[2] कालरात्रिः काली कामेषुकालिका॥ इद्रकाली पूर्वकाली पश्चिमाम्नायकालिका। श्मशानकालिका भद्रकाली श्रीकृष्णकालिका॥ क्रींका-

१ 'कालिका'। २ 'नीरकाली' पाठः।

री चोत्तराकाली ह्रूंह्रींदक्षिणकालिका । सुन्दरी त्रिपुरीशानी त्रिकूटा त्रिपुरार्चिता ॥ त्रिनेत्रा त्रिपुराध्यक्षा त्रिपुटा पुरभैरवी । त्रिलोकजननी त्रेता महात्रिपुरसुन्दरी ॥ कामेश्वरी कामकला कालकामेशसुन्दरी । त्र्यक्षरा त्र्यक्षरीदेवी भावना भुवनेश्वरी ॥ एकाक्षरी चतुष्कूटा त्रिकूटेशी लयेश्वरी । चतुर्वर्णा चतुर्वेदी वर्णाद्या चतुरक्षरी ॥ पञ्चाक्षरी च षड्वक्त्रा षट्कूटा च षडक्षरी । सप्ताक्षरी नवी[1] नीवी परमाष्टाक्षरीश्वरी ॥ नवमी पञ्चमी षष्ठी नागेशी च नवाक्षरी । दशाक्षरी दशास्येशी देविकैकादशाक्षरी ॥ द्वादशादित्यसङ्काशा द्वादशी द्वादशाक्षरी । त्रयोदशी वेदगर्भा वाद्या[2] त्रयोदशाक्षरी ॥ चतुर्दशाक्षरी विद्या

---

१ 'नवयोनिः' । २ 'विद्या' पाठः ।

विद्यापञ्चदशाक्षरी । षोडशी सर्व[1]विद्येशी महाश्रीषोडशाक्षरी ॥ महाश्रीषोडशीविद्या चिन्तामणिमनुप्रिया । द्वाविंशत्यक्षरी श्यामा महाकालकुटुम्बिनी ॥ वज्रतारा कालतारा नारी-तारोग्ररू[2]पिणी । कामतारा शब्दतारा स्पर्शतारा रसाश्रया ॥ रूपतारा गन्धतारा महानीलसरस्वती । कालज्वाला वह्निज्वाला ब्रह्मज्वाला जटाकुला ॥ विष्णुज्वाला जिष्णुज्वाला भद्रज्वाला करालिनी । विकरालमुखी देवी कराली भूतिभूषणा ॥ चित्ताशय्यासना चिन्ता चितामण्डलमध्यगा । भूतभैरवसेव्या च भूतभैरवपालिनी ॥ बन्धकी बद्धमुद्रा च भवबन्धविनाशिनी । भवानी देवदेवेशी दीक्षा दीक्षितपूजिता ॥ साधकेशी सि-

१ 'नित्येशी' पाठः । २ 'तारिणी' पाठः ।

द्धिधात्री साधकानन्दवर्धिनी । साधकाश्रय-
भूता च साधकेष्टफलप्रदा ॥ रजोवती राजसी
च रजकी च रजस्वला । पुष्पप्रिया पुष्पवती
स्वयम्भूपुष्पमालिका ॥ स्वयम्भूपुष्प[१]मालाढ्या
पुलस्त्यसुतघातिनी । [२]पात्रहस्ता सुता पौत्री
पीतास्या पीतभूषणा ॥ पिङ्गानना पिङ्गकेशा
पिङ्गला पिङ्गलेश्वरी । मङ्गला मङ्गलेशानी
सर्वमङ्गलमङ्गला ॥ पुरूरवेश्वरी पाशधरा चाप-
धरा धरा । पुण्यधात्री पुण्यमयी पुण्यलोकनि-
वासिनी ॥ होतृसेव्या हकारस्था सकारस्था सु-
खावती । सखी शोभावती सत्या सत्याचारपरा-
यणा ॥ सव्यंजना कुलेशानी वामदेवकलाश्रिता ।
सद्योजातकलादेवी शिवा घोरकलाकृतिः ॥ शर्व-

---



१ गन्धाढ्या पाठः । २ पाशहस्ता पाठः ।

री क्षीरसदृशी क्षीरनीरविवेकिनी । वितर्कनिलया नित्या नित्यक्लिन्नापराम्बिका ॥ पुरारिदयिता दीर्घा दीर्घनासाल्पभाषिणी । काशिका कौशिका कोश्या कोशदा रूपवर्धिनी ॥ तुष्टिः पुष्टिः प्रजा प्रीता प्राजिका पूजकप्रिया । प्रजावती गर्भवती गर्भपोषणपोषिता ॥ शुक्लवासा शुक्लरूपा शुचिहासा जयावहा । जानकी जन्यजनका जनपोषणतत्परा ॥ वादप्रिया वाद्यरता वादिता वादसुन्दरी । वाक्स्तम्भिनी कीरवाणी धीरा धीरधुरन्धरी ॥ स्तनन्धयी सामिधेनी निरानन्दा निरालया । समस्तसुखदा सारा वारांनिधिवरप्रदा ॥ वालुकी वीरपानेष्टा वसुधात्री वसुप्रिया शुक्रानन्दा शुक्ररसा शुक्रपूज्या शुकप्रिया ॥ शुकी

---

१ कौशिकी । [illegible] इत्यपि पाठः ।

च शुकहस्ता च समस्तनरकान्तका । समस्तत-त्त्वनिलया भगरूपा भगेश्वरी ॥ भगबिम्बा भगहृद्या भगलिङ्गस्वरूपिणी । भगलिङ्गेश्वरी श्रीदा भगलिङ्गामृतस्रवा ॥ क्षीराशना क्षीररुचि-राज्यपानपरायणा । मधुपानपरा प्रौढा पीवरांसा परंपरा ॥ पिलिम्पिला पटोलीशी पाटलारुणलोचना । क्षीराम्बुधिप्रिया क्षीबा सरला सरलायुधा ॥ संग्रामा सुनया स्रस्ता संसृतिः सनकेश्वरी । कन्या कनकरेखा च कान्यकुब्जनिवासिनी ॥ काञ्चनाभतनुः काष्ठा कुष्ठरोगविनाशिनी । कठोरमूर्धजा कुन्ती कुन्तायुधधरा धृतिः ॥ चर्माम्बरा क्रूरनखी चतुर्मुखी[1] चतुर्भुजा । चतुर्वेदप्रिया साध्वी[2] चतु-

---

१ चकोराक्षी । २ चर्चा पाठः ।

वर्गफलप्रदा ॥ ब्रह्माण्डचारिणी [1]स्फूर्तिर्ब्रह्माणी-
ब्रह्मसंमता । सत्कारकारिणी मूर्तिः सूतिका-
लतिका लता ॥ कल्पवल्ली कृशाङ्गी च कल्पपा-
दपवासिनी । कल्पपाशा महाविद्या विद्यारा-
ज्ञी सुखाश्रया ॥ भूतिराज्ञी विश्वराज्ञी लोक-
राज्ञी शिवाश्रया । ब्रह्मराज्ञी विष्णुराज्ञी रुद्रा-
ज्ञी जटाश्रया ॥ नागराज्ञी वंशराज्ञी वीरराज्ञी
रजःप्रिया । सत्त्वराज्ञी [2]तमोराज्ञी गुणराज्ञी
चलाचला ॥ वसुराज्ञी सत्यराज्ञी तपोराज्ञी
जपप्रिया । मंत्रराज्ञी वेदराज्ञी तंत्रराज्ञी श्रुति-
प्रिया ॥ देवराज्ञी मन्त्रिराज्ञी दैत्यराज्ञी दयाक-
रा । कालराज्ञी प्रजाराज्ञी तेजोराज्ञी हराश्रया ॥
गजराज्ञी गदाराज्ञी गुणराज्ञी गुणाश्रया ।

१ 'सूतिः' । २ 'तपोराज्ञी' पाठः ।

पृथ्वीराज्ञी पयोराज्ञी वायुराज्ञी मदालसा ॥
स्वाहाराज्ञी[1] स्वधाराज्ञी भीमराज्ञी भयोज्झिता ।
तथ्यराज्ञी जयाराज्ञी महाराज्ञी कुलाकृतिः ॥
वसुराज्ञी जैनराज्ञी[2] हरिराज्ञी हलेश्वरी ।
पराराज्ञी यत्तराज्ञी भूतराज्ञी शवासना ॥
वटुराज्ञी प्रेतराज्ञी शेषराज्ञी यमप्रिया । आका-
शराज्ञी राज्येशी राज्यराज्ञी रतिप्रिया ॥ पाता-
लराज्ञी भूराज्ञी प्रेमराज्ञी विषापहा । सिद्धरा-
ज्ञी विभाराज्ञी ज्योतीराज्ञी विभामयी ॥ भा-
स्वद्राज्ञी चन्द्रराज्ञी ताराराज्ञी खवासिनी ।
गृहराज्ञी लताराज्ञी वृत्तराज्ञी मतिप्रदा ॥ धीररा-
ज्ञी मनोराज्ञी मनुराज्ञी च काश्यपी । मुनि-
राज्ञी रत्नराज्ञी युगराज्ञी मणिप्रभा ॥ सिन्धुराज्ञी

---

१ सुराज्ञी, । २ धैनराज्ञी, पा० ।

नदीराज्ञी नदराज्ञी दरीस्थितिः । बिन्दुराज्ञी नादराज्ञी त्वात्मराज्ञी च सद्गतिः ॥ पुत्रराज्ञी ध्यानराज्ञी लयराज्ञी महेश्वरी । ईशानराज्ञी राज्ञीशी स्वाहाराज्ञी महत्तरा ॥ वह्निराज्ञी यज्ञराज्ञी योगिराज्ञी चिदाकृतिः । जगद्राज्ञी तत्त्वराज्ञी वाग्राज्ञी विश्वरूपिणी ॥ पञ्चदशाक्षरीराज्ञी ॐ-ह्रींभूते श्वेरश्वरी ॥ १००० ॥

इतीदं मन्त्रसर्वस्वं राज्ञीनामसहस्रकम् । पंचदशाक्षरीतत्त्वं तत्त्वसारं मनुप्रियम् ॥ सर्वततत्त्वमयं पुण्यं महापातकनाशनम् । सर्वसिद्धिप्रदं लोके सर्वरोगनिवर्हणम् ॥ इति नामसहस्रं तु राज्ञाः शिवमुखोद्गतम् । अत्यन्तदुर्लभं गोप्यं गोपनीयं स्वयोनिवत् ॥

इति श्रीरुद्रयामल संहितायां

श्रीमहाराज्ञीसहस्रनामस्तोत्रम् ॥

अथ महाराज्ञीस्तोत्रम् ।

शीतांशुबालार्ककृशानुनेत्रां
चतुर्भुजामेणत्वगासनस्थाम् ।
शंखाब्जशूलासिधरां महेशीं
राज्ञीं भजेऽहं तुहिनाद्रिरूपाम् ॥ १

स्मृतैवान्तर्गतान्पुंसां हरन्ती सकलान्मलान् ।
जयत्येषा महाराज्ञी भक्तानां मोक्षदायिनी ॥ २

त्रिजगन्मोहतिमिरमिहिरीभूतसद्गुणे ।
नमोऽस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥ ३

शेषाशेषमुखागण्यगुणे गुणगणप्रिये ।
नमोऽस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥ ४

चराचरजगत्सृष्टिस्थितिसंहारकारिणि ।
नमोऽस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥ ५

सुरासुरनरसिद्धवन्दनीयपदाम्बुजे ।
नमोऽस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥ ६

भक्तकल्पलते ऽनल्पवाङ्माधुर्यजितामृते ।
नमोऽस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥७॥
भक्तौघभीमसंसारपारावारप्रतारिणि ।
नमोऽस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥८॥
ब्रह्मविष्णुमहेशानवन्दिते गिरिनन्दिनि ।
नमोऽस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥९॥
निर्गुणे निष्क्रिये नित्ये सच्चिदानन्दरूपिणि ।
नमोऽस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥१०॥
राज्ञीस्तोत्रमिदं पुण्यं त्रिसन्ध्यं प्रयतः पठन् ।
असंशयं विशेषेण वशयत्यखिलं जगत् ॥११॥



# ॥ गौरीदशकम् ॥

ॐ नमो देव्यै भवान्यै वागीश्वर्यै ॥

ॐ लीलारब्धस्थापितलुप्ताखिललोकां । लोकातीतैर्योगिभिरऽन्तर्हृदि भाव्याम् ॥ बालादित्यश्रेणिसमानद्युतिपुञ्जां । गौरीमऽम्बामऽम्बुरुहाक्षीमऽहमीड्ये ॥१॥ प्रत्याहारध्यानसमाधिस्थितिभाजां । नित्यं चित्ते निर्वृत्तिकाष्ठां कलयन्तीम् ॥ सत्यज्ञानानन्दमयीं त्वां तनुमध्यां । गौरीमऽम्बामऽम्बुरुहाक्षीमहमीड्ये ॥ २ ॥ नानाकारैः शक्तिकदम्बैर्भुवनानि । व्याप्य स्वैरं क्रीडति यासौ स्वयमेका ॥ कल्याणीं त्वां कल्पलतामाऽऽनतिभाजां । गौरीमऽम्बा० ॥ ३ ॥ आशापाशक्लेशविनाशं विदधानां ॥ पादाम्भोजध्यानपराणां पुरुषाणाम् ईशीमीशार्धाङ्गहरां त्वामऽभिरामां । गौरीमऽम्बा० ॥४॥ यस्यामेतत्प्रोतमशेषं मणिमाला । सूत्रे यद्वत्क्वापि चरं चाप्यचरं च ॥ त्वामऽध्यात्मध्यानपदव्यागमनीयां । गौ०

मूलाधाराद्दुत्थितवन्तीं विधिरन्ध्रं । सौरं चान्द्रं धाम विहाय ज्वलिताङ्गीम् ॥ स्थूलां स्थूक्ष्मां सूक्ष्मतरां त्वामऽभिवन्द्यां । गौ० ॥ ६ ॥ चन्द्रापीडानन्दितमन्दस्मितवक्त्रां । चन्द्रापीडालङ्कृतलोलालकभाजाम् ॥ इन्द्रोपेन्द्राद्यर्चित पादाम्बुजयुग्मां । गौरीमऽम्बा० ॥७॥ आदिक्षान्तमऽक्षरमूर्त्त्या विलसन्तीं । भूते भूते भूतकदम्बप्रसवित्रीम् ॥ शब्दब्रह्मानन्दमयी त्वां तडिदाभां गौरीमऽम्बा० ॥ ८ ॥ यस्याः कुक्षौ लीनमऽखण्डं जगदऽण्डं । भूयो भूयः प्रादुरभूदऽक्षरमेव ॥ पत्या सार्धं त्वां स्फटिकाद्रौ विहरन्तीं । गौरीमऽम्बा० ॥९॥ नित्यः सत्यो निष्कल एकोजगदीशः । साक्षी यस्याः सर्गविधौ संहरणे च ॥ विश्वत्राणक्रीडनशीलां शिवपत्नीं । गौरीमऽम्बा० ॥ १० ॥ प्रातः काले भावविशुद्धिं प्रदधाना । नित्यं भक्त्या जल्पति गौरीदशकं यः वाचां सिद्धिं सम्पदमुच्चैः शिवभक्तिं । तस्याऽवश्यं पर्वतपुत्री विदधाति ॥ ११ ॥ (इति गौरीदशकं सम्पूर्णम्)